# भास्करद्वादशकम्

कार्त्तिक चन्द्र वाड़ी

तिमिराच्छन्नभुवनमिदमुज्ज्वलालोकमयं कृतं केन ।
हत्वा तमः खलु नयननिर्गतशुभ्रकिरणविशिखेन ।। १।।
सप्ताश्वरथारूढमानो य उदेति पूर्वाकाशे निशाहरः ।
प्रभातमानयति निशावसाने सैव तेजोशीलदिवाकरः ।। २।।
भवति हृदयं भुवनस्य व्याकुलं तव सरवगमने ।
पश्यति केवलं गमनं तव करुणघनसजलनयने ।। ३।।
ग्रस्यते जीवनमधुना चिराज्जगत अच्छेन गोधुलिना ।
विदार्य्यते तस्याखण्डहृदयञ्च तटिनीतटमिव वारिणा ।।४।।
निःश्वसते केवलं विरहानलदग्धं भुवनं क्षणे क्षणे ।
चित्रितनिर्वाकश्रोतेव चित्रपटे दरीदृश्यतेऽधोवदने ।। ५।।
चक्षुसत्त्वेऽपि मूर्खो यथान्धो भवति ज्ञानेन विना ।
प्राणसत्त्वेऽपि वसुन्धरा निष्प्रभते मृतेवालोकहीना ।। ६।।
नाधुना खलु दृश्यते किमुपायमपि चिन्तान्तावधिः ।
अनन्तजलमन्तरेणेव ननु गहनगम्भीरजलधिः ।। ७।।
जलहीनमत्स्यस्य जलमन्तरेण जायतेऽवस्था यादृशी।
तादृशजीवनत अचिरेण जीवनहीनदशा श्रेयसी ।। ८।।
पुष्पितपादपतः पतितप्रस्फुटितपुष्पमिव पदतले ।
आदित्यहीनजगत्पतति तमसाच्छन्नश्रीहीने रसातले।। ९।।
को रक्षत्येनं दिवाकराद्विना तिमिराच्छन्नभुवनम् ।
अतिक्रान्तं येन खलु हे प्रभो सहस्राधिकं सोपानम् ।। १०।।
भाति भास्वरगगने भास्करस्य यदा विभावरी गता प्रभा ।
भास्करस्यास्ति केवलं विभावरीनाशप्रभातागता प्रतिभा ।। ११।।
व्याकुलजगता हे करुणामय! काङ्क्ष्यते कृपया करुणा तव ।
रुग्णशुष्कदावदाहे मूर्छितकण्ठप्राणचातकस्योदकपानेच्छेव ।। १२।

।। एकविंशशताब्द्यां सान्डिल्यगोत्रीयगोपगोयालावंशीयेन वाड़ीपदवीधारिणा वङ्गीयतापसौरसजातकाजलेयकार्त्तिकचन्द्रेण विदीर्णहृदयेन कृतं करुणरसान्वितं भास्करद्वादशकम् ।।